परिमल संस्कृत ग्रन्थमाला—६

# महाभारतवचनामृतम्

(उपदेशसाहस्री)

तदिदं

वाक्यपदीयस्य सँस्कर्त्रा श्रीगान्धिचरिताऽनुवादकला-प्रस्ताव-
तरङ्गिणी-शब्दापशब्दविवेक-वाक्यमुक्तावली-व्याकरण-
चन्द्रोदयोपसर्गार्थचन्द्रिका-वाग्व्यवहारादर्श-
श्रीमद्भागवतभाषापरिच्छेदादीनामनेकेषां
ग्रन्थानां निर्मात्रा
व्याकरणमहाभाष्यस्य विवरीत्रा
श्रीरामकृष्णतनुजनुषा
डा० श्रीचारुदेवशास्त्रिणा प्रणीतम् ।

परिमल पब्लिकेशन्स
दिल्ली ★ अहमदाबाद

प्रकाशका :

परिमल पब्लिकेशन्स
३३/१७ शक्तिनगरे
देहल्याम्
( २ )
७ बी, ज्योतिपार्क
शाह आलम
अहमदाबाद

प्रथमं संस्करणम्
मार्च मासे १९८३ ख्रिस्तवत्सरे प्रकाशितम् ।

मूल्यम् : ५५.००

मुद्रक :
लक्ष्मी कम्पोजिंग ऐजन्सी,
२० डी/४, मेन रोड, बाबरपुर,

# किञ्चिद् वक्तव्यम्

भारतं महाभारतं चेति द्वे अपि समाख्ये आख्यानविदां विदिते। यत्पुरा भारतमभूत्तदेव कालात्यये महत्त्वमापन्नं महाभारतमिति प्रथां प्रपेदे। कस्मिन्काले केन वा कालेन परिबृंहणमिदमजनिष्टेति नेश्महे वक्तुम्। अयुगपदुत्पन्नं क्रमिकमिदं समवृतदिति तु सत्यम्। उपक्रमे काऽस्य ग्रन्थप्रवेकस्येयत्तेति विषये मूल एव निर्विशयं स्मृतम्—चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् इति। तदिदमाख्यानोपाख्यानान्युप-बृंहणसाधनानि व्यतिरिच्योदितं परिमाणम्। अष्टौ श्लोकसहस्राण्यष्टभिः श्लोकशतैः सहचरितान्यादितः पद्यानां संख्याऽभूदिति केचित्। तन्न। अप्रसन्नानां दुर्गमार्थानां यत्नव्याख्येयानां पद्यानां सा संख्येति मूले स्थितम्। अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च। अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वेति तत्र विस्पष्टोक्तेः। वैशम्पायनप्रभृतिभिः शिष्यैः सौत्यादिभिः प्रशिष्यैश्च भगवतो व्यासस्य कृतेः शब्दार्थोपजनः कृत इति सम्प्रतिपद्यन्ते विवेक्तारः प्रवक्तारः पुरातना नूतनाश्च। अतएव युज्यतेऽस्माभिर्ग्रन्थादौ प्रणीता सहशिष्यस्य भगवतः कृष्णद्वैपायनस्य नमस्या।

महाभारतं नामेतिहासः कुरुपाण्डवानामायोधनस्य चिरन्तनस्य। सत्यं भूयःसु पर्वसु सविस्तर इतिहासपरो ग्रन्थः, तथाप्युद्योगे भीष्मे शान्तावनुशासने चोपदेशप्रधान इत्यपि सत्यम्। तदनुरोधेन—धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ! यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचिदिति सूच्चैर्विशब्दनमाञ्जसं भवति। स्मृतिरूपता चास्योपपन्ना भवति।

अथ केन प्रयुक्तैरस्माभिरयं सङ्ग्रहः संकलित इति पृच्छायां ब्रूमः—इह देहल्यां महति प्रत्यूषे सहविहारिणो धर्म जिज्ञासमानाः केचन वयस्या अत्र कर्मणि प्रयोजका अभूवँल्लोकसङ्ग्रहस्पृहा च। एते हि मध्येपथं स्थिता उपरुध्य मामहरहः प्रायूयुजञ्शास्त्रार्थैः कियानपि नः श्राव्यतामिति। अहं चैनान् यथोपपादं तत्तच्छास्त्रवचनान्यशिश्रवं वर्षद्वयम्। सर्वमिदं सुगृहीतमपि प्रवयसो वयं विस्मरणशीला इति न चिरं स्थास्यति नः स्वान्तेष्विति पुस्तिका काचित् प्रणीयतां शास्त्रार्थं निबध्नती विशदव्याख्यायुतम् इति ते मामसकृत् प्रार्थयन्त। अहं चेमं प्रणयिनां प्रणयं विहन्तुमक्षमो महाभारते विप्रकीर्णानि वाक्यरत्नानि सङ्ग्रहीतुं प्रावृतम्, प्रवृत्तश्च सहस्रं समग्रहीषम्। तेनेयं कृतिरुपदेशसाहस्रीत्यभिधीयते महाभारतवचनामृतमिति चेति।

इह कृतौ श्लोकाः श्लोकांशाश्च प्रायशः प्रकरणशो निबद्धा ऋजुतरया हिन्द्या च तथानूदिता यथा श्रवणसमनन्तरमेव सुग्रहाः स्युः। तेषु तेषु कर्मान्तिरेषु लौकिकेषु व्याप्रियमाणाः क्षणमलभमानाः संस्कृतमजानानाः स्वल्पं वा जानानाः कामयमाना अपि महाभारतमादित आन्तमध्येतुमनीशाना इमं सङ्ग्रहमनायासं ग्रहीष्यन्ति, आर्याचारविचारस्य पद्धतिं च वेदिष्यन्ति वेद्यार्थवेदनेन च सुखं संवेदिष्यन्तीत्याशंसमानो विरमाम्यहं विदां विधेयश्चारुदेवः शास्त्री ॥

# समर्पणम्

**प्रातर्विहारे नित्यं संसृज्यमानैः श्रीजगन्नाथाऽग्रवाल-प्रभृतिभिः प्रणयिभिः प्रयुक्तोऽहमिमं सङ्ग्रहं समग्रहीषमिति तेभ्य एव सस्नेहमर्पयामि।**

प्रातः काल नित्य सैर में मिलने वाले श्री जगन्नाथ अग्रवाल आदि प्रेमी मित्रों द्वारा प्रेरित होकर मैंने यह संग्रह तैयार किया है सो उन्हीं की सेवा में स्नेह-पूर्वक अर्पण करता हूँ ॥

३।५४ सुरभौ रूपनगरे देहल्याम् २८-२-८३

— ० —

# विषयानुक्रमणिका

| सम्पूर्ण नाम | संक्षिप्त नाम |
|---|---|
| १, आदिपर्व | आदि० |
| २. सभापर्व | सभा० |
| ३. वनपर्व | वन० |
| ४. विराटपर्व | वि० |
| ५. उद्योगपर्व | उ० |
| ६. भीष्मपर्व | भीष्म० |
| ७. द्रोणपर्व | द्रोण० |
| ८. कर्णपर्व | कर्ण० |
| ९. शल्यपर्व | शल्य० |
| १०. सौप्तिकपर्व | सौ० |
| ११. स्त्रीपर्व | स्त्री० |
| १२. शान्तिपर्व | शान्ति० |
| १३. अनुशासनपर्व | अनु० |
| १४. आश्वमेधिकपर्व | आश्व० |
| १५. आश्रम वासिकपर्व | आश्रम० |
| १६. मौसलपर्व | मौ० |
| १७. महा प्रस्थानिकपर्व | महाप्र० |
| १८. स्वर्गारोहणपर्व | स्वर्गा० |

— ० —

ओं नमः परमात्मने ।

नमः सहशिष्याय भगवते कृष्णद्वैपायनाय व्यासाय ।

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ।
इत्येवं कीर्त्यते प्राज्ञैः पुराणैर्नूतनैरुत ॥१॥
संहिता शतसाहस्री कार्ष्णी वेद इतीव वा ।
कृतिर्व्यासस्य या लोक्या पावनी लोकविश्रुता ॥२॥
ततः प्रयत्नमास्थाय कल्याणीं कलयामहे ।
शिष्ट्योपदेशसाहस्रीं वाक्यामृतपराभिधाम् ॥३॥
इयं नूनं कृतिर्मेऽद्य कृत्याकृत्यविवेचनी ।
आर्याचारविचारस्य पद्धतीं सम्प्रणेष्यति ॥४॥
सुहृदः स्नेहभाजो ये कर्मण्यत्र प्रयोजकाः ।
धर्मं जिज्ञासमानांस्तान्धन्यान्नामाभिदध्महे ॥५॥

# अथ महाभारतवचनामृतम्

## असङ्गः

(अनासक्ति, लगाव का न होना)

१. असङ्गः श्रेयसो मूलम् ॥ शां० २१८।३।

सङ्ग का अभाव कल्याण का मूल कारण है ।

२. अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
नैते तव न तेषां त्वं तत्र का परिदेवना । स्त्री० २।२३॥

वे भाई बन्धु पहले परोक्ष थे, फिर प्रत्यक्ष हुए, पुनः परोक्ष हो गये । न ये तेरे हैं और न तू इनका, तो (जुदाई होने पर) विलाप क्यों हो ॥

३. मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् । स्त्री० २।२१॥

हमें जन्म-जन्मान्तरों में हजारों माता-पिताओं और सैकड़ों पुत्र-पत्नियों का दर्शन हुआ है । वे किसके हैं और हम किसके ॥

## अहिंसा

४. **सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ।**
**एवं सर्वमहिंसायां धर्मार्थमपिधीयते** ।। शां० २४५।१८-१९।।

जैसे हाथी के पैर में सभी पैर समा जाते हैं, वैसे ही अहिंसा में सभी धर्म और अर्थ समा जाते हैं । अर्थात् अहिंसा-व्रत का पालन करने से सभी धर्मों का पालन हो जाता है और सभी अर्थों की सिद्धि हो जाती है ।।

५. **अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः ।**
**अहिंसा परमम् दानम्.........** ।। अनु० ११६।३८।।

अहिंसा परम धर्म है, अहिंसा परम दम (इन्द्रियों पर वश) है, और अहिंसा सबसे उत्तम दान है । दान यहाँ प्राण-दान के अर्थ में है ।।

६. **अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः** ।। अनु० १६३।१२।।

अहिंसा-व्रती को लम्बी आयु प्राप्त होती है । ऐसा बुद्धिमानों का कथन है ।।

## आचारः

(सदाचार, शिष्टाचार, रीति-रिवाज)

७. **तृणानि भूमिरुदक वाक्चतुर्थी च सूनृता ।**
**सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन** ।। वन० २।५४।।

कुशा-तृण आदि का आसन, बैठने का स्थान, (हाथ-पैर धोने और पीने का) जल, प्रिय-सत्य वाणी—इनका सत्पुरुषों के घरों में कभी भी अभाव नहीं होता ।।

८. **चक्षुर्दद्यान्मनो दद्याद् वाचं दद्याच्च सूनृताम् ।**
**उत्थाय चासनं दद्यादेष धर्मः सनातनः** ।। वन० २।५६।।
**(प्रत्युत्थाय चाभिगमनं कुर्यान्न्यायेन चार्चनम्)**

(घर आये हुए अतिथि को) प्रेम-भरी दृष्टि से देखे, उसकी ओर ध्यान दे, उससे मीठे वचन कहे, उसे उठकर आसन दे, यह सनातन धर्म है । (अपने स्थान से उठकर उस की ओर बढ़े और विधिपूर्वक सत्कार करे) ।।

९. **न पापे प्रतिपापः स्यात्साधुरेव सदा भवेत् ।**
**आत्मनैव हतः पापो यः पापं कर्तुमिच्छति** ।। वन० २०७।४५।।

दुष्ट के प्रति दुष्टता का व्यवहार न करे, सज्जनता से ही सदा बर्ते। (कारण कि) जो पापी पाप करना चाहता है, वह अपने पाप से पहले ही मरा हुआ है ॥

१०. अन्धस्य पन्था बधिरस्य पन्था
स्त्रियाः पन्था भारवाहस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य
समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ वन० १३३।१॥

अन्धे के लिये मार्ग छोड़े, बहिरे के लिये मार्ग छोड़े, नारी के लिये मार्ग छोड़े, बोझा उठाये हुए के लिये मार्ग छोड़े, ब्राह्मण के साथ मेल न होने पर राजा के लिए मार्ग छोड़े, पर ब्राह्मण के साथ मेल होने पर (राजा को मार्ग न देकर पहले) ब्राह्मण को ही मार्ग दे ॥

११. दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्यमेव च ।
तिष्ठन्ति न चिरम्······ ॥ वन० २४६।१८॥

विनय से रहित (शिष्टाचार-हीन) पुरुष लक्ष्मी, विद्या और प्रभुत्व को प्राप्त करके भी चिर तक नहीं ठहरते ॥

१२. देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ वन० ३१३।५८॥

जो देवता, अतिथि, नौकर, पितर तथा आत्मीय जनों के लिये भाग निकाले बिना भोजन करता है, वह साँस लेता हुआ भी वस्तुतः जीता नहीं ॥

१३. तदेवासनमन्विच्छेद्यत्र नाभिपतेत्परः । वि० ४।१३।

उस आसन पर बैठने की इच्छा न करे जिस पर कोई दूसरा आने को है ।

१४. नहि कश्चिन्नापनयते पुमानन्यत्र भार्गवात् । उ० ३६।३०।

भार्गव (भृगुगोत्रीय शुक्राचार्य) को छोड़कर कोई विरला ही नीतिविरुद्ध आचरण नहीं करता ।

१५. रिक्तपाणिर्न पश्येत राजानं ब्राह्मणं स्त्रियम् । द्रोण० १७४।४३।

राजा, ब्राह्मण व स्त्री को खाली हाथ मिलने न जाये ।

१६. नापत्रपेत प्रश्नेषु नाविभाव्यां गिरं सृजेत । शां० ६३।१०।

प्रश्नों के उत्तर देने में घबराये नहीं (अर्थात् न्याय-युक्त कठोर उत्तर भी देना पड़े तो दे), पर ओछा वचन न बोले ।

१७. यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ॥ शां० १२४।६७॥

जिस प्रयत्न-पूर्वक किये अपने कर्म से दूसरों का हित न हो, अथवा जिस से स्वयं लजाये उसे कभी न करे।

१८. अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ शां० १८६ । ५ ॥

घर पर आये हुए शत्रु का भी उचित अतिथि-सत्कार करे । वृक्ष अपने को काटने के लिये आये हुए पुरुष से अपनी छाया नहीं हटाता ॥

१९. नित्योच्छिष्टः संकुसको नेहायुर्विन्दते महत् । शां० १९३।१३।

नित्य जूठन छोड़ने वाला, किसी एक स्थान में न ठहरने वाला लम्बी आयु को प्राप्त नहीं होता ।

२०. प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् । शां० १९३।२४।

सूर्य की ओर मुंह करके पेशाब न करे, अपनी विष्ठा को न देखे ।

२१. त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत् । शां० १९३।२५।

अपने से बड़ों को तू करके न पुकारे और उनका नाम न ले ।

२२. कर्मातिरेकेण गुरावध्येतव्यं बुभूषता ।
दक्षिणोऽनपवादी स्यादाहूतो गुरुमाश्रयेत् ॥ शां० २४२।१९॥

बढ़ना चाहता हुआ शिष्य गुरु सेवा से बचे हुए समय में गुरु से पढ़े । मधुर-भाषी अनिन्दक होकर गुरु से बुलाये जाने पर पढ़ने के लिए जाये ।

२३. यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत् परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ शां० २५९।२०॥

जिस व्यवहार को पुरुष चाहता है कि दूसरे उसके प्रति न करें, उसे अपने प्रति अप्रिय जानता हुआ दूसरों के प्रति न करे ।

२४. अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ शां० २६०।८॥

धर्मों—आचारों का यथा-शक्ति पालन होता रहता है कृत, त्रेता, द्वापर युगों में आचार बदलते रहते हैं ।

२५. नहि सर्वहितः [illegible] । शां० २६०।[illegible]

सब के लिये एक समान हितकारी कोई आचार नहीं होता ।

२६. नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि मेधावी जडवल्लोक आचरेत् ॥ शां० २८७।३५॥

बिना पूछे किसी से न कहे, बेढ़ंगे तौर से पूछने पर भी उत्तर न दे । जानता हुआ भी बुद्धिमान् मूर्ख (अनजान) का सा व्यवहार करे ॥

२७. सन्ध्यायां न स्वपेद्राजन् विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथायुर्विन्दते महत् ॥ अनु० १०४।१६॥

सन्ध्या-समय में न सोए और न विद्याभ्यास करे और नहीं भोजन करे ऐसा (निषिद्ध आचरण न करता हुआ) लम्बे जीवन को प्राप्त होता है ॥

२८. पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ अनु० १०४।२५॥

ब्राह्मण को, गौओं को, राजाओं को, बूढ़े को, बोझ से तपे हुए को, गर्भवती स्त्री को तथा दुर्बल (कमज़ोर) को मार्ग दे ॥

२९. उदक् शिरा न स्वपेत तथा प्रत्यक्शिरा न च । अनु० १०४।४८।
उत्तर की ओर सिर करके न सोए, तथा पश्चिम की ओर सिर करके न सोएं ।

३०. ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ अनु० १०४।६४॥

वृद्ध के आते ही युवा-पुरुष के प्राण (स्वभावतः) ऊपर की ओर उठते हैं । सत्कारार्थ (अपने आसन से) उठने से तथा नमस्कार करने से वे (प्राण) पहली स्थिति को प्राप्त हो जाते हैं ॥

३१. न संहताभ्यां पाणिभ्यां कण्डूयेज्जातु वै शिरः । अनु० १०४।६६।
दोनों हाथों से एक साथ सिर को न खुजले ।

३२. प्रत्यादित्यं प्रत्यनलं प्रति गां च प्रति द्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥ अनु० १०४।७५॥

जो सूर्य, अग्नि, गौ, ब्राह्मण की ओर मुंह करके तथा रास्ते में पेशाब करते हैं उनकी आयु क्षीण हो जाती है ।

३३. दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ अनु० १०४।८२॥

घर से परे मूत्र करे, पाओं को धोने के जल को छोड़े, तथा जूठन का त्याग करे, यदि अपना भला चाहे ॥

३४. अर्चेद् देवानदम्भेन सेवेतामायया गुरून् ।
निधिं निदध्यात् पारत्र्यं यात्रार्थं दानशब्दितम् ॥ अनु० १६२।६३।

देवताओं का बिना दिखावा किये पूजन करे, गुरुओं की छल-रहित होकर सेवा करे और परलोक के लिये दान-नामक निधि को जोड़े ॥

## आत्मा

३५. आपदर्थे धनं रक्षेद् दारान् रक्षेद् धनैरपि ।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि ॥ आदि० १५८।२७॥

आपत्ति के लिये धन की रक्षा करे (बचाए रखे)। धन के द्वारा (धन चाहे जाये) गृहिणी की रक्षा करे। अपने आप की तो गृहिणी तथा धन के चले जाने पर भी रक्षा करे॥

३६. न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना । वन० ३२।५८।

अपने आप का अनादर करने वाले का (=अपने आप को तुच्छ समझने वाले का) अभ्युदय (=वृद्धि, उन्नति) नहीं होता।

३७. उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ भीष्म० ३०।५॥

अपने यत्न से अपने आप का उद्धार करे, अपने आप को गिराये नहीं (हतोत्साह न हो)। आत्मा ही आत्मा का बन्धु है (दूसरा नहीं) और आत्मा ही शत्रु है ॥

३८. सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमतः सर्वात्मानं प्रशंसति ॥ सौ० ३।४॥

सब कोई अपने आप को अधिक बुद्धिमान् समझता है। सब को अपने प्रति आदर का भाव है। सब कोई अपने आप की प्रशंसा करता है ॥

३९. किं ते धनैर्बान्धवैर्वापि किं ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ शां० १७५।३८॥

हे ब्राह्मण ! तुझे धन से क्या काम ? बन्धुओं और स्त्री से भी क्या काम, जब तुझे मृत्यु से छुटकारा नहीं। आत्मा की खोज कर जो गुफा में छिपा है। तेरे पितामह कहां गये और पिता कहाँ ॥

४०. **किमात्मना यो न जितेन्द्रियो वशी । शां० ३२१।९३।**

अपने आप से क्या लाभ, जब इन्द्रियों और मन पर वश नहीं।

## आर्जवम्

(ऋजुता, सरलता)

४१. **सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।**
**उभे त्वेते समे स्यातामार्जवं वा विशिष्यते ॥ उ० ३५।२॥**

सब तीर्थों में स्नान और सभी प्राणियों के प्रति सरलता। ये दोनों बराबर हो सकते हैं (इन का समान फल हो सकता है) अथवा इन दोनों में सरलता बढ़िया है ॥

४२. **सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।**
**एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ॥ शां० ७९।२१॥**

सभी कुटिलता मृत्यु का मूल है और सरलता ब्रह्मप्राप्ति का। इतना ही ज्ञान का विषय है। अनर्थक वचन-विस्तार से क्या लाभ ॥।

४३. **आर्जवं धर्ममित्याहुरधर्मो जिह्म उच्यते । अनु० १४२।३०।**

सरलता धर्म है और कुटिलता अधर्म है ऐसा (तत्त्ववेत्ता) कहते हैं।

## आर्य:

४४. **नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत । सभा० ५९।११।**

आर्य न तु अव्यक्त (द्व्यर्थक) वचन बोलते हैं और न छल-युक्त व्यवहार करते हैं।

४५. **न वैरमुद्दीपयति प्रशान्तं**
**न दर्पमारोहति नास्तमेति ।**
**न दुर्गतोऽस्मीति करोत्यकार्यं**
**तमार्यशीलं परमाहुरार्य्याः ॥ उ० ३३।११२॥**

जो शान्त हुए वैर को पुनः नहीं जगाता, घमंड नहीं करता और न ही अपने अस्तित्व को खोता है और जो मैं दरिद्र अथवा दुःखी हूँ यह समझकर कुकर्म नहीं करता, उसे आर्य-लोग आर्य स्वभाव वाला कहते हैं ॥

४६. आर्येण सुकरं ह्याहुरार्यकर्म धनञ्जय ।
अनार्यकर्म त्वार्येण सुदुष्करतरं भुवि ॥ द्रोण० ११८।१०॥

आर्य के लिए आर्य-कर्म (श्रेष्ठ काम) करना आसान है । पर आर्य के लिए निकृष्ट काम करना बहुत मुश्किल है ॥

४७. आर्येण हि न वक्तव्या कदाचित्स्तुतिरात्मनः । द्रोण० १९५।२१।

आर्य को अपनी प्रशंसा कभी नहीं करनी चाहिए ।

४८. आत्मनिन्दाऽऽत्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्य्याणां वृत्तमेतच्चतुर्विधम् ॥ कर्ण० ३५।४५।

अपनी निन्दा, अपना सत्कार, दूसरे की निन्दा, दूसरे की स्तुति—यह चार प्रकार का व्यवहार आर्यों का आचार नहीं है ॥

## ईश्वरः

४९. अज्ञो जन्तुरनीशो ऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा नरकमेव वा ॥ वन० ३०।२८॥

जीव अज्ञ (अबोध) है । सुख दुःख इसके अधीन नहीं हैं ईश्वर की प्रेरणा से ही यह स्वर्ग अथवा नरक को प्राप्त होता है ॥

५० उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ उ० ३१।२॥

पूर्व-जन्म कृत कर्म को जगाता हुआ (=फलोन्मुख करता हुआ) ईश्वर ही किसी मूर्ख को पण्डित बना दे और पण्डित को मूर्ख ॥

५१. ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ भीष्म० ४५।६१॥

हे अर्जुन ! सब प्राणियों के हृदय में वर्तमान ईश्वर अपनी शक्ति से यन्त्र पर चढ़े हुए सब प्राणियों को घुमा रहा है ॥

# करादानम्

(कर=टैक्स का लेना)

५२. मालाकार इवारामे स्नेहं कुर्वन्पुनः पुनः।
वृक्षानङ्गारकारीव मैतान्धाक्षीः समूलकान् ॥ सभा० ६२।१६॥

हे राजन्! बगीचे में माली की तरह जो स्नेह-पूर्वक पौधों से (उपहारार्थ) फूलों को बार-बार चुनता है, ऐसे कर ग्रहण कर। कोयला बनाने वाले की तरह प्रजाओं का समूल नाश मत कर। उद्योग पर्व (३४।१८) में भी इसी भाव का यह श्लोक पढ़ा है—पुष्पं पुष्पं विचिन्वीत मूलोच्छेदं न कारयेत्। मालाकार इवारामे न यथाङ्गारकारकः॥

५३. यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ उ० ३८।१७॥

जिस प्रकार भौंरा फूलों को बचाता हुआ शहद ग्रहण करता है, इसी प्रकार (राजा) प्रजाओं से बिना दुःख दिये कर ग्रहण करे॥

५४. ऊधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी न लभेत् पयः।
एवं राष्ट्रमयोगेन पीडितं न विवर्धते ॥ शां० ७२।१६॥

जो दूध चाहता हुआ गौ के अदर को ही काट दे वह दूध को प्राप्त न होवे। इसी प्रकार अन्याय्य कर से पीड़ित हुआ राष्ट्र नहीं बढ़ता, अर्थात् नष्ट हो जाता है।

५५. जलौकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः।
व्याघ्रीव च हरेत्पुत्रान् सन्दशेन्न च पीडयेत् ॥ शां० ८८।५॥

राजा जोंक की भाँति बिना पीडा दिये राष्ट्र को पीये (अर्थात् प्रजाओं से कर ले)। शेरनी की तरह पुत्रों को उठाये दाँतों से पकड़े पर पीड़ा न दे॥

५६. यथा शल्यकवानाखुः पदं धूनयते सदा।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥ शां० ८८।६॥

जैसे तीक्ष्ण (तेज) दाँतों वाला चूहा सोये हुए पुरुष के पैर के माँस को खाता है जिससे सोया हुआ पुरुष पैर को कुछ-कुछ हिलाता है पर जाग कर चूहे को नहीं हटाता, ऐसे ही राजा नरमी से राष्ट्र को पीये (चूसे)॥

५७. नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥ शां० १३९।१०९॥

जिस राजा की प्रजा टैक्स के बोझ से अति पीड़ित हो नित्य अशान्त रहती है और अपदाग्रों से छिन्न-भिन्न होती है वह (स्वयं भी) नष्ट हो जाता है ॥

## कर्म

५८ **तदिदं वेदवचनं कुरु कर्म त्यजेति च। वन० २।७४।**

यह वेद का वचन है (श्रुति का उपदेश है)। काम कर पर अभिमान त्यागकर, अर्थात् मैं कर्ता हूं इस भाव को छोड़ कर।

५९. **कर्म खल्विह कर्तव्यं जानताऽमित्रकर्शन।**
**अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ वन० ३२।३॥**

हे परन्तप! बुद्धिमान् पुरुष को कर्म करना चाहिये। कर्महीन तो वृक्षादि स्थावर ही जीते हैं।

६०. **बहूनां समवाये हि भावानां कर्मसिद्धयः। वन० ३२।५१॥**

बहुत से कारणों के जुटने से कर्म में सफलता प्राप्त होती है।

६१. **इह यत् क्रियते कर्म तत्परत्रोपभुज्यते।**
**कर्मभूमिरियं ब्रह्मन् फलभूमिरसौ मता ॥ वन० २६१।३५॥**

हे ब्राह्मण! जो कर्म इस लोक में किया जाता है परलोक में उसे भोगा जाता है। यह कर्मभूमि है और वह फलभूमि है ॥

६२. **न कर्मणां विप्रणाशोऽस्त्यमुत्र**
**पुण्यानां वाप्यथवा पापकानाम्।**
**पूर्वं कर्तुर्गच्छति पुण्यपापं**
**पश्चात्त्वेनमनुयात्येव कर्ता ॥ उ० २७।१०॥**

पुण्य अथवा पाप कर्मों का परलोक में (दूसरी योनि में जाने पर) नाश नहीं हो जाता। पुण्य, पाप तो कर्ता से पहले वहां पहुंच जाते हैं और कर्ता पीछे ॥

६३. **द्वावेव न विराजेते विपरीतेन कर्मणा।**
**गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ उ० ३३।५७॥**

विपरीत आचरण से दो शोभा नहीं पाते—गृहस्थ जो निष्कर्मा है (काम नहीं करता) और यति (संन्यासी) जो नाना धन्धों में आसक्त है ।।

६४. **दम्भं मोहं मत्सरं पापकृत्यं**
**राजद्विष्टं पैशुनं पूगवैरम् ।**
**मत्तोन्मत्तैर्दुर्जनैश्चापि वादं**
**यः प्रज्ञावान् वर्जयेत्स प्रधानः ।। उ० ३३।११५।।**

जो दम्भ (दिखावे के लिये धर्माचरण), मोह (अन्यथा बोध), मत्सर (दूसरों का अभ्युदय देखकर जलन), पाप कर्म, राजा के प्रति द्वेष, चुगली, बहुतों से वैर, मदिरापान किए हुए, पागल व दुर्जन के साथ संवाद नहीं करता वह सुमति पुरुष सर्वश्रेष्ठ है ।।

६५. **किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।**
**इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा ।। उ० ३४।१६।।**

ऐसा करने से क्या होगा, ऐसा न करने से क्या होगा इस प्रकार सोच कर कर्मों को करे या न करे ।।

६६. **संगृह्णीयादनुरूपान् सहायान् ।**
**सहायसाध्यानि हि दुष्कराणि ।। उ० ३७।२४।।**

योग्य सहायकों को अपने साथ ले (अपना बनाये) । कठिन कार्य पर-सहायता से ही सिद्ध होते हैं ।

६७. **ददाति यत्पार्थिव यत्करोति**
**यद्वा तपस्तप्यति यज्जुहोति ।**
**न तस्य नाशोस्ति न चापकर्षो**
**नान्यस्तदश्नाति स एव कर्ता ।। उ० १२३।२२।।**

हे राजन् ! जो कुछ देता है, जो कुछ करता है, जो तप तपता है, जो होम करता है, उसका न तो नाश होता है और न ही वह घटता है। करने वाले को फल मिलता है किसी दूसरे को नहीं ।।

६८. **कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।। भीष्म० २६।४७।।**

तेरा कर्म करने में ही अधिकार है, फल में कभी भी नहीं । कर्मफल तेरी प्रवृत्ति का कारण मत हो । निश्चेष्टता (कर्म न करना) में भी तेरा हठ मत हो ।।

६९. न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।। भीष्म० २७।५।

कोई भी क्षण भर के लिये भी कर्महीन नहीं रह सकता । प्रकृति हर किसी से अपने गुणों (सत्त्व, रजस्, तमस्) द्वारा वश में करके कर्म करवाती है ।।

७०. नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ।। भीष्म० २७।८।।

शास्त्र-विहित कर्म को कर । न करने से करना अच्छा है । कर्म के बिना तो जीवन निर्वाह भी नहीं हो सकता ।

७१. स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् । भीष्म० ४२।४७।

प्रकृति-सिद्ध कर्म को करता हुआ पाप का भागी नहीं होता ।

७२. सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।। भीष्म० ४२।४८।।

हे कुन्तीपुत्र अर्जुन ! स्वभाव-नियत (पितृ-पितामह अनुक्रम से प्राप्त) कर्म का, चाहे वह दोषवान् भी हो, त्याग न करें, कारण कि सभी चेष्टाएँ दोष से घिरी हुई हैं जैसे धूँए से अग्नि ।

७३. शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ।। स्त्री० २।३२।।

पहले किया हुआ कर्म लेटे हुए कर्ता के साथ लेट जाता है, खड़े हुए के साथ ठहर जाता है, दौड़ते हुए के साथ दौड़ता है । भाव यह है कि कर्म नित्य ही प्रत्येक अवस्था में कर्त्ता के साथ जुड़ा रहता है, जिस से कर्त्ता फल से छूट नहीं सकता ।।

७४. प्राक् कर्मभिस्तु भूतानि भवन्ति न भवन्ति च । स्त्री० ३।१७।

पूर्व जन्म में किये हुए कर्मों के द्वारा प्राणी वृद्धि तथा ह्रास को प्राप्त होते हैं ।

७५. न हि नाशोऽस्ति वार्ष्णेय कर्मणोः शुभपापयोः । स्त्री० १८।१२।

हे वृष्णिगोत्रज (कृष्ण) पुण्य और पाप कर्मों का कभी नाश नहीं होता ।

७६. यत्करोति शुभं कर्म तथा कर्म सुदारुणम् ।
तत्कर्तैव समश्नाति बान्धवानां किमत्र हि ।। शां० १५३।४१।।

जो कुछ शुभ कर्म करता है अथवा भयानक (रौद्र, क्रूर) कर्म करता है कर्ता ही उसका फल भोगता है । बन्धुओं को उससे क्या मतलब ।।

७७. यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ।। शां १८१।१६।।

जैसे बछड़ा हजारों गौओं में अपनी मां को ढूंढकर प्राप्त हो जाता है, ऐसे पूर्वकृत कर्म कर्ता को जा मिलता है ।।

७८. कर्मणा बध्यते जन्तु विद्यया च प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।। शां० २४१।७।।

कर्म से जीव बन्धन में आता है । (अर्थात् कर्म-फल-भोग के लिए जीव को शरीर धारण करना पड़ता है) और विद्या (=आत्मज्ञान) से मोक्ष को प्राप्त होता है । अतः तत्त्वदर्शी लोग कर्म नहीं करते ।।

७९. नाकृत्वा लभते कश्चित् किञ्चिदत्र प्रियाप्रियम् । शां० २९८।३०।

कोई भी बिना कर्म किए इष्ट या अनिष्ट को प्राप्त नहीं कर सकता ।

८०. एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप । शां० ३४८।६२ ।

हे राजन् ! निष्काम कर्म करने वाले भक्त विरले ही मिलते हैं ।

८१. यथा च्छायातपौ नित्यं सुसम्बद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च सम्बद्धावात्मकर्मभिः ।। अनु० १ । ७५ ।।

जैसे छाया और धूप आपस में नित्य जुड़े हुए हैं वैसे ही कर्ता और कर्म कर्मों द्वारा जुड़े हुए हैं ।।

८२. स्वकर्मप्रत्ययान् लोकान्सर्वे गच्छन्ति वै नृप । अनु० १ । ८१ ।

हे राजन्, हर एक अपने कर्मों के अनुसार (भिन्न-भिन्न) लोकों को प्राप्त होता है ।

## कामः

(कामना, पदार्थों की चाह, इन्द्रिय-तृप्ति, स्त्री-भोगेच्छा)

८३. **कामं हित्वाऽर्थवान् भवति । वन० ३१३ । ७८ ।**

इन्द्रिय-तृप्ति को छोड़कर ही धनी हो सकता है ।

८४. **कामः संसारहेतुश्च । वन० ३१३ । ६८।**

विषयाभिलाष (विषयों की चाह) जन्म-मरण-चक्र का हेतु है।

८५. **कामा मनुष्यं प्रसजन्त एते । उ० २७।४।**

कामनाएँ मनुष्य को जन्म-मरण में बाँधती हैं ।

८६. **ह्रियं कामः (हन्ति) । उ० ३५।५०।**

कामातुरता लज्जा को नष्ट कर देती है ।

८७. **अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ।। भीष्म० २७।२६।।**

८८. **काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ।। भीष्म० २७।३७।।**

हे वार्ष्णेय (कृष्ण) ! किससे प्रेरित हुआ यह मनुष्य न चाहता हुआ भी पाप करता है, मानो जबरदस्ती लगाया गया है ।।

**उत्तर**—यह रजोगुण से उत्पन्न काम अथवा क्रोध ही है जो बड़ा पेटू और महापापी है, इसे तू यहाँ अपना बड़ा वैरी समझ ।।

८९. **यः कामानाप्नुयात्सर्वान्**
**यश्चैतान् केवलांस्त्यजेत् ।**
**प्रापणात्सर्व-कामानां**
**परित्यागो विशिष्यते ।। शां० १७७।१६।।**

जो सब कामनाओं को पूर्ण करे और जो इन सब का त्याग करे । सबकी प्राप्ति की अपेक्षा सबका त्याग बढ़िया है ।।

९०. कामं जानामि ते मूलं संकल्पात्किल जायसे ।
न त्वां संकल्पयिष्यामि समूलो न भविष्यसि ।। शां० १७७।२५।।

हे काम ! मैं तेरे मूल को जानता हूं, तू संकल्प से जन्मता है। मैं तेरा संकल्प नहीं करूँगा (तुझे मन में नहीं लाऊँगा), जिससे तू समूल नष्ट हो जायेगा ।।

९१. न खल्वप्यरसज्ञस्य कामः क्वचन जायते । शां० १८०।३०।

जिसने विषयों का रस अभी नहीं चखा उसमें कामना (चाह) उत्पन्न नहीं होती ।

९२. न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।। आदि० ७५।५०।

इच्छाओं के उपभोग से इच्छाएँ शान्त नहीं होतीं । अग्नि में हवि-रूप घृत डालने से अग्नि और बढ़कती है ।।

९३. यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदात्मज्योतिरचिरात्स्वात्मन्येव प्रसीदति ।। शां० २१।३।।

जब पुरुष कामनाओं को अपने अन्दर ऐसे समेट लेता है जैसे कछुआ अपने अंगों को अपने अन्दर छिपा लेता है तब आत्म-ज्योति से प्रकाशित हो अपने आप में सन्तुष्ट हो जाता है ।।

## कालः

९४. कालः सृजति भूतानि कालः संहरति प्रजाः ।
संहरन्तं प्रजाः कालं कालः शमयते पुनः ।। आदि० १।२४८।।

काल प्राणि-मात्र को उत्पन्न करता है और काल प्रजाओं का संहार करता है । संहार करते हुए काल को काल ही शान्त करता है ।।

९५. न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।
कालस्य बलमेतद् हि विपरीतार्थदर्शनम् ।। सभा० ८१।११।।

काल डंडा उठाकर किसी का सिर नहीं काटता । यह काल का प्रभाव है कि पुरुष उलटा-पुलटा समझने लगता है ।।

९६. न चापि कृत्रिमः कालः कालो हि परमेश्वरः । उ० ११२।२०।

(सूर्यादि की गति से) जिसका निर्माण होता है वही काल नहीं; काल तो निश्चय भगवान् (सर्वशक्तिमान्) है ।

९७. कालः कर्ता विकर्ता च सर्वमन्यदकारणम् । शां० २२७।७३।

काल ही बनाता है काल ही बिगाड़ता है । और सब कुछ अकारण है ।

(९८) कालोपहतचित्ता हि सर्वे मुह्यन्ति भारत । शल्य० ६३।४७।

हे भारत ! काल से दूषित चित्त वाले (मलिन मन वाले) सभी मोह (अज्ञान, अविवेक) को प्राप्त हो जाते हैं ।

९९. एष मूर्धाभिषिक्तानामग्रे गत्वा परन्तपः ।
सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम् ।। शल्य० ६५।१७।।

क्षत्रियों का अग्रगामी (आगे जाने वाला, नेता) शत्रुओं को दमन करने वाला यह (दुर्योधन) तिनकों भरी मिट्टी को चाटता है । काल की गति को देख ।।

१००. अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ।। स्त्री० २।५।।

न लड़ता हुआ मर जाता है और लड़ता हुआ जीता रहता है । महाराज काल की पहुंच में आकर कोई नहीं बचता ।

१०१. यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ।। स्त्री० २।६।।

हे भरत-श्रेष्ठ (धृतराष्ट्र) जैसे वायु सब तिनकों को वश में कर लेता है, वैसेही सभी प्राणी काल के वश में आ जाते हैं ।।

१०२. एकसार्थं-प्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ।। स्त्री० २।१०।।

परलोक को जाने वाले एक साथ चलते हुए सभी यात्रियों में जिसका काल (मृत्यु काल) आ गया है वह पहले चला जाता है तो इसमें विलाप का क्या काम ।।

१०३. न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ स्त्री० २।२३॥

काल (अन्तक, यम) का हे कौरवश्रेष्ठ! किसी के साथ प्यार नहीं है और किसी के साथ द्वेष नहीं और न ही वह उदासीन (=न शत्रु न मित्र) है। काल सब को अपनी ओर खेंच लेता है॥

१०४. कालेन शीघ्राः प्रवहन्ति वाताः
कालेन वृष्टिर्जलदानुपैति।
कालेन पद्मोत्पलवज्जलं च
कालेन पुष्प्यन्ति वनेषु वृक्षाः ॥ शां० २५।८॥

समय पर वायु तेज गति से चलता है, समय पर बादलों में बरसाने का जल आ जाता है, समय पर जल में कमल और नीलोफ़र उत्पन्न हो जाते हैं और समय पर वृक्षों मे फूल आ जाते हैं॥

१०५. नाकालमत्ताः खगपन्नगाश्च
मृगद्विपाः शैलमहाग्रहाश्च।
नाकालतः स्त्रीषु भवन्ति गर्भा
नायान्त्यकाले शिशिरोष्णवर्षाः ॥ २५।१०॥

समय आने पर ही पंछी और सांप, मृग व हाथी, पर्वत और महाग्रह मस्ती में आते हैं, समय आने पर ही स्त्रियाँ गर्भधारण करती हैं, समय आने पर ही पतझड़ गर्मी और बरसात आती है॥

१०६. नाकालतो म्रियते जायते वा नाकालतो व्याहरते च बालः।
नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीजमुप्तम् ॥ शां० ।२५।११॥

समय आने पर ही जन्म और मरण होता है। समय आने पर ही बच्चा बोलने लगता है, समय आने पर ही यौवन (जवानी) को प्राप्त होता है और समय पर ही बोया हुआ बीज उगता है॥

१०७. नाकालतो भानुरुपैति योगं नाकालतोऽस्तंगिरिमभ्युपैति।
नाकालतो वर्धते हीयते च चन्द्रः समुद्रश्च महोर्मिमाली ॥ शां० १२।२५॥

समय पर ही सूर्य (चन्द्रादि से) योग (मेल) को प्राप्त होता है, समय पर ही अस्ताचल को प्राप्त होता है। समय पर ही चाँद और महातरंग-युक्त समुद्र बढ़ता और घटता है॥

१०८. **वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्बलाः ।**
**श्रीमन्तश्च तथा षण्ढा विचित्रः कालपर्ययः ।। शां० २८।२२।।**

वैद्य होते हुए भी रोगी होते हैं, बलवान् (शरीर का बल होने पर) भी दुर्बल (=मनोबल-हीन) होते हैं, धनी होते हुए नपुंसक होते हैं। काल की गति विचित्र है ।।

१०९. **यो हि कालो व्यतिक्रामेत् पुरुषं कालकाङ्क्षिणम् ।**
**दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षुणा ।। शां० १०३।२१।।**

अवसर प्रतीक्षा करने वाले के हाथ से जो काल निकल जाये, कर्म करने की इच्छा करने वाले उस पुरुष के हाथ वह काल दुबारा नहीं लगता ।।

११०. **प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोपि वा ।**
**सर्वः कालवशं याति शुभाशुभसमन्वितः ।। शां० १५३।४३।।**

बुद्धिमान् हो अथवा मूर्ख, धनी हो अथवा निर्धन, पाप-पुण्य से युक्त सब कोई काल के गाल में जाता है ।।

१११. **गन्ता गतिमतां कालः कालः कलयति प्रजाः । शां० २२७।३५।**

गतिमान् पदार्थों में काल उत्तमगति वाला है। काल प्रजाओं का संहार करता है।

## कलिकालः

## (कलियुग)

११२. **अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।**
**केशशूलाः स्त्रियो राजन् भविष्यन्ति युगक्षये ।। वन० १८८।८२।।**

हे राजन् ! युगक्षय=द्वापर का अन्त, कलियुग के प्रारम्भ में जनपद-वासी (देहाती) अन्न को बेचने वाले, ब्राह्मण वेद को बेचने वाले और स्त्रियाँ अपने सतीत्व को बेचने वाली होंगी ।। अट्ट=अन्न । शिव=वेद । चतुष्पथ=ब्राह्मण । केश=भगा ।

११३. **न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ।**
**स्वयंग्राहा भविष्यन्ति युगान्ते समुपस्थिते ।। वन० १९०।३६।।**

कलियुग के आरम्भ में न कोई विवाहार्थ पिता से कन्या को माँगेगा और न कोई पिता कन्या को विधिवत् विवाह में देगा। कन्याएँ स्वेच्छा से वर ग्रहण करेंगी।

## कीर्तिः

११४. कीर्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते।
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः॥ वन० ३०१।५॥

हे तेजस्विन्, जीते हुए पुरुष को कीर्ति से लाभ है। मरने पर भस्म हुए देही को कीर्ति से क्या लाभ ?

११५. मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः। वन० ३०१।७।

मरने के पीछे पुरुष की कीर्ति ऐसी है जैसे मृतक शरीर को माला पहनाना।

११६. अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयन्।
विपश्चिद् गुणसम्पन्नः प्राप्नोत्येव महद्यशः॥ शां० २८७।२८॥

दूसरे की निन्दा न करने से और अपने सत्कार की कथा न कहने से गुणी विद्वान् अवश्य महान् यश को प्राप्त करता है॥

## कृतघ्नः

११७. कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम्।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः॥ उ० १०७।१०॥

कृतघ्न (=किये हुए उपकार को न मानने वाला) को यश कहाँ, ठिकाना कहाँ, सुख कहाँ ! कृतघ्न विश्वास के योग्य नहीं होता। कृतघ्नता के पाप का कोई प्रायश्चित्त नहीं॥

११८. ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते। द्रोण० १८३।२८।

ब्रह्महत्या का पाप उसे लगता है जो किये हुए उपकार को नहीं मानता।

११९. ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा।
निष्कृति र्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥ शां० २७१।११॥

ब्राह्मण की हत्या करने वाले, सुरा पीने वाले, चोरी करने वाले, ब्रह्मचर्य व्रत को भग्न करने वाले के लिये तो सत्पुरुषों (शास्त्रकारों) ने प्रायश्चित्त बतलाया है, पर कृतघ्न के लिये कोई प्रायश्चित्त नहीं कहा, अर्थात् उसका पाप किसी भी उपाय से धुल नहीं सकता ।।

## क्रोध :

१२०. **क्रोधं हित्वा न शोचति । वन० ३१३।७८।**

क्रोध को त्याग कर शोक को नहीं प्राप्त होता ।

१२१. **क्रोधो ऽसूयासुतः स्मृतः । शां० २७१।२१।**

क्रोध असूया (दूसरे के गुणों को न सहना, गुणों में दोष देखना) का पुत्र है ऐसा कहा गया है ।

## क्षत्रियः

१२२. **अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत् ।**
**कुर्यात् तृणमयं चापं शयीत मृगशायिकाम् ।। आदि०१४०।१२-१३।।**

(क्षात्र-धर्म बतलाते हुए कहते हैं)—अन्धा बनने से यदि कार्य सिद्ध हो अन्धा बन जाये, यदि बहिरेपन से काम निकले तो बहिरा बन जाये (अर्थात् तिरस्कार के वचनों को भी सहे) । (असमर्थ होने पर) अपने धनुप को तिनकों का बना हुआ समझले । अर्थात् शत्रु का आश्रय लेकर उससे काम न ले । विश्वास दिलाकर शत्रु को मार डाले जैसे शिकारी अपने आप को सोया हुआ दिखाकर मृगों को विश्वास दिलाकर उन्हें मार डालता है ।।

१२३. **न निर्मन्युः क्षत्रियोस्ति लोके निर्वचनं स्मृतम् । वन० २७।३७।**

क्षत्रिय कोई भी क्रोध-रहित नहीं होता, ऐसी कहावत है ।

१२४. **बलज्येष्ठं स्मृतं क्षत्रम् । ३०१६८।१७।**

क्षत्रिय जाति बल के कारण दूसरों से श्रेष्ठ होती है ।

१२५. **अधर्मः क्षत्रियस्यैष यद् व्याधिमरणं गृहे । भीष्म० १७।११।**

क्षत्रिय के घर में बीमारी से मरना पाप है ।

१२६. **क्षत्रियस्य मलं भैक्ष्यम् । कर्ण० ४५।२३।**

क्षत्रियों के लिये भिक्षा मांगना कलंक है ।

१२७. **न ह्यधर्मोस्ति पापीयान् क्षत्रियस्य पलायनात् । कर्ण० ६३।५६।**

क्षत्रिय के लिए रण छोड़ भागने से कोई बड़ा पाप नहीं । शल्यपर्व (२।५७) में भी ऐसा ही वचन मिलता है—नान्यत्कर्मास्ति पापीयः क्षत्रियस्य पलायनात् ।

१२८. **अधर्मः सुमहानेष यच्छय्यामरणं गृहे । शल्य० ५।३२ ।**

क्षत्रिय के लिए घर में बिस्तरे पर मरना बड़ा पाप है ।

१२९. **यदा शूरं च भीरुं च मारयत्यन्तकः सदा ।**
**को न मूढो न युध्येत पुरुषः क्षत्रियो ध्रुवम् ।। शल्य० १९।६१-६२।।**

जब यमराज सभी के प्राणों को हर लेता है, चाहे कोई वीर हो या डरपोक, तो ऐसा कौन क्षत्रिय है जो मूढ न हो और युद्ध न लड़े ?

१३०. **न हि धर्मः स्मृतो राजन्क्षत्रियस्य प्रतिग्रहः । शल्य० ३१।५७।**

हे राजन् ! दान लेना क्षत्रिय का धर्म नहीं कहा गया ।

१३१. **निस्तेजाः क्षत्रियोऽधमः । सौ० ३।२०।**

तेजहीन (प्रताप-रहित) क्षत्रिय नीच होता है ।

१३२. **क्षत्रियस्य हि विशेषेण हृदयं वज्रसंनिभम् । शां० २२।६।**

यह प्रसिद्ध है (अथवा निश्चित है) कि क्षत्रिय का हृदय वज्र की तरह कठोर होता है ।

१३३. **ब्राह्मणानां क्षतत्राणात् ततः क्षत्रिय उच्यते । शां० ५९।१२५।**

ब्राह्मणों को घाव से बचाने के कारण क्षत्रिय को क्षत्रिय कहा गया है ।

१३४. **अविक्षतेन देहेन समराद्यो निवर्तते ।**
**क्षत्रियो, नास्य तत्कर्म प्रशंसन्ति पुराविदः ।। शां० ६०।१६।।**

जो क्षत्रिय विना घाव लगे शरीर से युद्ध भूमि से लौट आता है उसके उस कर्म को इतिहास जानने वाले अच्छा नहीं कहते ।।

१३५. **क्षत्रिये संगतं नास्ति न प्रीतिर्न च सौहृदम् । शां० १३९।१६।**

क्षत्रिय में न मैत्री होती है, न प्रेम और न शुभ-भावना ।

१३६. **क्षत्रियस्य तु बालिश्याद् ब्राह्मणः क्लिश्यते क्षुधा । शा० १६५।१३।**

क्षत्रिय (राजा) की मूर्खता से ही ब्राह्मण भूख से पीड़ित होता है।

१३७. **ज्ञान-विज्ञान-सम्पन्नः संस्कृतो वेदपारगः ।**
**विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा ।। अनु० १४३।४५।।**

ज्ञान (ब्रह्मविद्या), विज्ञान (शिल्पादि-ज्ञान), से युक्त संस्कारवान्, वेद का पूर्ण ज्ञाता धार्मिक क्षत्रिय अपने कर्म से ब्राह्मणता को प्राप्त हो जाता है ।।

## ( क्षमा )

१३८. **क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् । वन०२९।४०।**

क्षमा तेजस्वियों का तेज है, और तपस्वियों का ब्रह्म तेज है।

१३९. **क्षमा च परमं बलम् । वन०२१३।३०।**

क्षमा सबसे बड़ी शक्ति है।

१४०. **एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।**
**यदेनं क्षमया युक्तमशक्तं मन्यते जनः ।। उ० ३३।४८।।**

क्षमावान् में एक ही दोष है, दूसरा कोई नहीं—यही कि क्षमा-युक्त पुरुष को लोग अशक्त (असमर्थ) समझते हैं ।।

१४१. **क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा । उ०३३।४९।**

शक्ति हीन लोगों के लिए क्षमा गुण है (उपकारक, कार्यसाधक) है और शक्तिमानों का भूषण है (शोभा है) ।

१४२. **क्षमा गुणवतां बलम् । उ० ३४।७५।**

गुणियों का क्षमा बल है।

१४३. **मन्यते कर्षयित्वा तु क्षमा साध्वीति शम्बरः ।**

**असन्तप्तं तु यद् दारु प्रत्येति प्रकृतिं पुनः ।। शां० १०२।३१।।**

शम्बर-नामक दैत्य का मत है कि पीड़ित करने के पीछे क्षमा ठीक रहती है (इसमें यह निदर्शन है—) बिना तपाई हुई लकड़ी (बेंत आदि) झुकाने के अनन्तर फिर अपनी अवस्था में आ जाती है ।।

## गङ्गा

१४४. भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात् तद्वत् सर्वपापैः प्रमुच्यते ।। अनु० २६।४४।

गरुड़ के दर्शन से जैसे सांप विष-हीन हो जाते हैं वैसे ही गंगा के दर्शन से सब पापों से छूट जाता है ।।

१४५. श्रुताऽभिलषिता पीता स्पृष्टा दृष्टाऽवगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ।। अनु० २६।६३।।

गंगा मनुष्य के दोनों कुलों (पितृ-कुल मातृ-कुल) को तार देती है जब इस का नाम सुना जाये, जब इस की मन से चाह की जाये, जब इसका जल पीया जाये, जब इसका स्पर्श किया जाये, जब इसका दर्शन किया जाये अथवा इसमें डुबकी लगाई जाये ।।

## गुरुः

१४६. पञ्चैव गुरवो ब्रह्मन् पुरुषस्य बुभूषतः ।
पिता माताऽग्निरात्मा च गुरुश्च द्विजसत्तम ।। वन० २१४।२८।।

हे ब्राह्मण ! वृद्धि चाहते हुए पुरुष के पाँच गुरु हैं—पिता, माता, अग्नि, आत्मा (अपना आप) तथा उपाध्याय ।।

१४७. गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ।। शां० ५७।७।।

अवलिप्त (=दृप्त, घमंडी), कर्तव्य और अकर्तव्य की पहचान न करने वाला, उन्मार्गगामी—ऐसे गुरु का त्याग शास्त्र-विहित है ।।

१४८. विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते
प्रत्यासन्ना मनसा कर्मणा वा ।

**तेषां पापं भ्रूणहत्याविशिष्टं**
**नान्यस्तेभ्यः पापकृदस्ति लोके ॥ शां० १०८।२३॥**

जो (शिष्य) गुरु मुख से शास्त्र-श्रवण करके गुरु का आदर नहीं करते, वे मन और कर्म से नष्ट-भ्रष्ट हो जाते हैं। उनका पाप गर्भ-पात के पाप से भी बड़ा है, लोक में उनसे अधिक पापी नहीं है ॥

१४९. **न वाच्यः परिवादोऽयं न श्रोतव्यः कथं चन।**
**कर्णाविथापिधातव्यौ प्रस्थेयं चान्यतो भवेत् ॥ शां० १३२।१२**

गुरु की निन्दा (उसके सामने) न करनी चाहिये और न दूसरे से की जा रही सुननी चाहिये। कान बन्द कर लेने चाहियें अथवा निन्दा के स्थल से परे हट जाना चाहिये ॥

१५०. **न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः। शां० ३२६।२२॥**

बिना गुरु की सेवा में गये ज्ञान की प्राप्ति नहीं होती।

## गृहस्थः

१५१. **वयांसि पशवश्चैव भूतानि च जनाधिप।**
**गृहस्थैरेव धार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी ॥ शां० २३।५॥**

हे राजन्! पशु-पक्षी और दूसरे प्राणियों को गृहस्थ ही धारणा करता है, अतः गृहाश्रमी दूसरे आश्रमियों से उत्तम है ॥

१५२. **सोऽयं चतुर्णामेतेषामाश्रमाणां धुराधरः।**
**तं चराविमनाः पार्थ दुष्करं दुर्बलेन्द्रियैः ॥ शां० २३।६॥**

हे पृथा-सुत अर्जुन! यह गृहस्थाश्रम दूसरे आश्रमों की अपेक्षा दूभर है। इसका लग्न से सेवन कर। दुर्बल इन्द्रिय वालों से इसका सेवन मुश्किल है ॥

१५३. **अन्नं च नो बहु भवेदतिथींश्च लभेमहि।**
**श्रद्धा च नो मा विगमन्मा च याचिष्म कञ्चन ॥ शां० २९।२१॥**

(एक सच्चे गृहस्थ की प्रार्थना है)—हमें बहुत-सा अन्न प्राप्त हो (हम बहुत-सा अन्न पकायें), हमें बहुत से अतिथि प्राप्त हों। हमारी श्रद्धा बनी रहे और हम किसी से माँगें नहीं ॥

१५४. **यथा प्रव्रजितो भिक्षुस्तथैव स्वे गृहे वसेत् । शां० ३६।३५।**

जिस प्रकार एक यति घर को त्याग कर रहता है वैसे ही गृही (गृहस्थ) घर में रहे (अर्थात् अनासक्त होकर रहे, घर से चिपके नहीं) ।

१५५. **गृहस्थस्त्वेष धर्माणां सर्वेषां मूलमुच्यते । शां० २३४।६।**

गृहस्थ सब धर्मों का मूल है ।

१५६. **गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।**
**अपत्यस्यैव चापत्यं वनमेव तदाऽऽश्रयेत् ।। शां० २३६।४।।**

जब गृहस्थ देखे कि मेरे अंगों में झुरियाँ पड़ गई हैं और मेरे सिर के बाल सफेद हो गये हैं और जब उसके पुत्र के हाँ पुत्र हो जाये तब वन को चला जाये (अर्थात् वानप्रस्थ आश्रम में प्रवेश करे) ।।

१५७. **यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।**
**एवं गार्हस्थ्यमाश्रित्य वर्तन्त इतराश्रमाः ।। शां० २६९।६।।**

जिस प्रकार सभी जीव अपनी माता का आश्रय लेकर जीते हैं उसी प्रकार दूसरे आश्रम गृहस्थ आश्रम को आश्रित करके जीते हैं ।।

१५८. **अप्रयत्नागताः सेव्या गृहस्थै विषयाः सदा ।**
**प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ।। शां० २९५।३५।।**

बिना घोर प्रयत्न किए जो पदार्थ प्राप्त होते हैं उनका नित्य सेवन करे (नहीं तो अर्थों के अर्जन में सारी शक्ति क्षीण हो जायेगी) । हाँ धर्माचरण यत्न-पूर्वक करे, ऐसा मेरा विचार है ।।

१५९. **यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।**
**एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ।। शां० २९५।३९।।**

जिस प्रकार नदियाँ और नद सभी समुद्र में जा ठहरती हैं उसी प्रकार दूसरे (ब्रह्मचर्यादि) आश्रम गृहस्थाश्रम पर टिके हुए हैं ।।

## गौः

१६०. **गन्धेन गावः पश्यन्ति । उ० ३४।३४।**

गौ आदि पशु गन्ध से देखते हैं, अर्थात् सूंघ कर पता लेते हैं कि अमुक वस्तु खाद्य है अथवा नहीं ।

१६१. **गौर्वरिष्ठा चतुष्पदाम् । भीष्म० १२२।३४।।**

चौपायों में गौ सबसे श्रेष्ठ है ।

१६२. **अमृतं वै गवां क्षीरम् । अनु० ६६।४६।**

गौ का दूध निश्चय ही अमृत है ।

१६३. **यथा हि गङ्गा सरितां वरिष्ठा**
**तथार्जुनीनां कपिला वरिष्ठा । अनु० ७७।८।**

जिस प्रकार गङ्गा नदियों में श्रेष्ठ है उसी प्रकार गौओं में कपिला ।

## घातकः

## (मारने वाला)

१६४. **महादोषतरस्तत्र घातको न तु खादकः । अनु० ११५।४६।**
(पशु आदि के) मारने वाला अधिक पापी है, उतना खाने वाला नहीं ।

१६५. **आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।**
**संस्कर्ता चोपभोक्ता च घातकाः सर्व एव ते ।। अनु० ११५।४६।।**

लाने वाला, मारने में अनुमति देने वाला, अंग-अंग काटने वाला, खरीदने और बेचने वाला, पकाने वाला और खाने वाला—ये सभी मारने वाले ही हैं ।।

## चिकित्सकः

## (वैद्य)

१६६, **व्याधितेषु चिकित्सका (जीवन्ति)। उ०३३।८४।**

रोगी लोग वैद्यों के जीवन का आधार हैं ।

१६७. **व्याधिभिर्मथ्यमानानां त्यजतां विपुलं धनम् ।**
**वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ।। शां०३३१।३०।।**

नाना रोगों से पीडित, बहुतसा धन खर्च करते हुए रोगियों की पीड़ा को वैद्य कम नहीं कर सकते ।।

१६८. ते चातिनिपुणा वैद्याः
कुशलाः सम्भृतौषधाः ।
व्याधिभिः परिकृष्यन्ते
मृगा व्याधैरिवार्दिताः ।। शां० ३३१।३१।।

वे चिकित्सकों में अति निपुण, नाना दवाइयों को तैयार करने वाले वैद्य स्वयं रोगों से पीडित होते हैं जैसे मृग शिकारी से पीछा किये हुए पीडित होते हैं ।।

## ज्ञानम्

१६९. सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । भीष्म० २८।३३।

हे पार्थ (अर्जुन) ! आत्म-ज्ञान होने पर सभी कर्म (लौकिक व पारलौकिक) पूर्ण रूप से समाप्त हो जाते हैं अर्थात् प्रयोजन न होने से कुछ कर्त्तव्य शेष नहीं रहता ।

१७०. ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतले प्रख्ये पश्यत्यात्मानमात्मना ।। शां० २०४।।।८

पाप के (भोग द्वारा) क्षीण होने पर ज्ञान का उदय होता है जैसे शुद्ध दर्पण में मनुष्य अपने स्वरूप को देखता है वैसे आत्मा (बुद्धि) में आत्मा का भास होता है । सप्तम्यन्त 'आत्मनि' पाठ अधिक उचित होगा ।

१७१. ज्ञानान्मोक्षो जायते राजसिंह । शां० ३१८।८७।

हे राजन् ! ज्ञान से मोक्ष होता है (दूसरा कोई उपाय नहीं) ।

१७२. अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ।
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते ।। शां० १७९।१३।।

जब सब (जड़ चेतन) पदार्थ को वे अन्तवाले हैं और (सत्त्व, रज, तम) गुणों से युक्त हैं ऐसा जान लेता है और उत्पत्ति और नाश के तत्त्व को समझ जाता है तब उस ज्ञानी के लिये क्या कर्त्तव्य शेष रह जाता है ।।

## तपः

१७३. नातप्ततपसो लोके प्राप्नुवन्ति महासुखम् । वन० २५९।१३।

बिना तप तपे लोक में कोई भी बड़े सुख को नहीं प्राप्त होते ।

१७४. तपसा विन्दते महत् । वन० ३१३।४८ ।

तपस्या से महान् पद को प्राप्त होता है ।

१७५. अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ।। शां० ७९।१८।।

अहिंसा (किसी को दुःख न पहुँचाना, किसी की हत्या न करना); सत्य बोलना, (किसी के प्रति) क्रूर न होना, इन्द्रियों को वश में करना और दया करना—ज्ञानी लोग इन्हें तप कहते हैं, शरीर को उपवास आदि से सुखाना तप नहीं है ।।

१७६. नित्यं क्रोधात् तपो रक्षेत् । शां० १८९।१०।

क्रोध करके अपनी तपस्या का नाश न करे ।

१७७. युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।। शां० २१०।१९ ।।

कल्प के अन्त में छिपे हुए इतिहास-सहित वेदों को महर्षियों ने ब्रह्मा की आज्ञा पा तपस्या-द्वारा पुनः प्राप्त किया ।।

## तीर्थम्

१७८. दुष्करं पुष्करे गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ।। वन० ८२।३९।।

पुष्कर तीर्थ को जाना दुष्कर है (अर्थात् कोई भाग्यवान् ही जाता है), पुष्कर में तप दुष्कर है, पुष्कर में दान करना दुष्कर है और पुष्कर में निवास इससे भी दुष्कर है ।।

१७९. सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ।। शां० २६३।४०।।

हे जाजले! सभी नदियां सरस्वती नदी का स्वरूप हैं, सभी पर्वत पावन स्थान हैं। वस्तुतः तेरा अपना आप ही तीर्थ है। तीर्थ-दर्शन की इच्छा से देशाटन मत कर॥ मनु० (८६।२) में इसी भाव का श्लोक है—यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः॥ अर्थात् धर्मराज जो तेरे हृदय में वर्तमान है, इसके साथ यदि तेरा झगड़ा नहीं, तो गंगा अथवा कुरुक्षेत्र को मत जा (जाना व्यर्थ है॥)

## तृष्णा

१८०. **यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥ शां० १७६।४६॥**

जो इस लोक में विषयभोग का सुख है और जो परलोक में सुराङ्गना आदि के भोग का सुख है—यह दोनों सुख तृष्णा-क्षय (चाह का मिटना) के सुख का पासंग भी नहीं हैं॥

**या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।**
**योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥ शां० १७४।५५॥**

जिसे कुमति वाले लोग छोड़ नहीं सकते, जो बुढ़ापा आने पर भी बूढ़ी नहीं होती, जो प्राणों तक रहने वाला रोग है, उस तृष्णा को छोड़ने पर ही सुख मिलता है॥

१८१. **यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते।**
**तथैव तृष्णा वित्तेन वर्धमानेन वर्धते॥ शां० २७६।७॥**

जैसे ज्यों-ज्यों बैल बढ़ता जाता है, त्यों त्यों उसका सींग बढ़ता है, वैसे ही धन की बढ़ौती के साथ-साथ तृष्णा बढ़ती जाती है॥

१८२. **उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते।**
**प्रार्थना पुरुषस्येह तस्य मात्रा न विद्यते॥ अनु० ६३।४५॥**

जैसे रुरु-नामक मृग का सींग उस की शरीर-वृद्धि के साथ-साथ बढ़ता जाता है वैसे ही पुरुष की चाह बढ़ती जाती है। उस-उस प्राप्ति की चाह की कोई सीमा नहीं है॥

## त्यागः

१८३. **य शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ भीष्म० ४०।२३॥**

जो शास्त्र के विधान का त्याग कर मन माना व्यवहार करता है, उसे न तो सफलता प्राप्त होती है, न सुख और न उत्तम गति ॥

१८४. **सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः । भीष्म० ४२।२।**

चतुर लोग सब कर्मों के फलों के त्याग को ही त्याग कहते हैं ।

१८५. **नियतस्य तु संन्यासः कर्मणो नोपपद्यते । भीष्म० ४२।७।**

नित्य कर्म (सन्ध्या-वन्दनादि) का त्याग कभी नहीं होता ।

१८६. **नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । भीष्म० ४२।११।**

शरीर-धारी जीव कर्मों का अत्यन्त त्याग नहीं कर सकता ।

१८७. **अपि चेन्महतो वित्तान्न प्रमुच्येत पूरुषः ।**
**नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः ॥शां० २०४।२१॥**

यदि पुरुष प्रत्यक्ष रूप से बड़े धन का त्याग न कर सके, तो यह मेरा नहीं है, ऐसा मान कर अपना इष्ट साधन करे ॥

१८८. **नास्ति त्यागसमं सुखम् । शां० २७७।३६।**

त्याग बरोबर सुख नहीं है ।

१८९. **त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज ।**
**उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज । शां० ३३१।४४।**

धर्म और अधर्म—दोनों को त्याग दे, सत्य और असत्य—दोनों को त्याग दे। सत्य और असत्य को त्याग कर उसे भी त्याग दे जिससे इन का त्याग करता है (अर्थात् संकल्प-विकल्प-आत्मक मन को अचेतन जड़ बना दे जिससे संकल्प उठना ही रुक जाये) ॥

## दण्डः

१९०. **प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।**
**तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ॥ आदि० १८०।९॥**

जब लोक में पाप (दुष्टकर्म, अपराध) को (दण्ड द्वारा) रोकने वाला होता है तब कोई पापी अपराधी नहीं हो सकता ॥

१९१. **नियन्ता चेन्न विद्येत न कश्चिद् धर्ममाचरेत् । वि० ६८।४५।**

यदि कोई नियम में रखने वाला न हो तो कोई भी धर्म न करे ।

१९२. **नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते ।**
**नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत ॥ शां० १४।१४॥**

हे भारत दण्ड न देता हुआ राजा शोभा नहीं पाता (निस्तेज हो जाता है), न दण्ड देने वाला राष्ट्र का उपभोग नहीं कर सकता। दण्ड हीन राजा की प्रजा सुखी नहीं रहती (दुष्ट, चोर, डाकू आदि उपद्रव करते रहते हैं) ॥

१९३. **दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।**
**दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ शां० १५।२॥**

दण्ड ही प्रजाओं पर शासन करता है, दण्ड ही उनकी रक्षा करता है, दण्ड ही प्रजाओं के सोते समय चौकसी करता है, अतः दण्ड ही धर्म का स्थापक है ॥

१९४. **असंमोहाय मर्त्यानामर्थानां संरक्षणाय च ।**
**मर्यादा स्थापिता लोके दण्डसंज्ञा विशांपते ॥ शां० १५।१०॥**

हे राजन्, प्रजायें गड़बड़ा न जायें इस लिये, धन आदि सुरक्षित हो इस लिये भी दण्ड नामक मर्यादा स्थापित की गई है ।

१९५. **यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।**
**प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति ॥ शां० १५।११॥**

जहाँ श्याम वर्ण, रक्ताक्ष (लाल आँखों वाला), नित्य उद्यत (तैयार) दण्ड विचरण करता है वहाँ प्रजाएँ गड़बड़ाती नहीं (सन्मार्ग को भूलती नहीं) यदि राजा न्याय को दृष्टि में रखता है ॥

१९६. **नाभीतो यजते राजन् नाभीतो दातुमिच्छति ।**
**नाभीतः पुरुषः कश्चित् समये स्थातुमिच्छति ॥ शां० १५।१४॥**

हे राजन् ! दण्ड-भय के कारण ही पुरुष यज्ञ करता है, दण्ड-भय से ही दान देता है और दण्ड-भय से आचार की मर्यादा में ठहरता है ॥

१९७. **दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ।**
**शूले मत्स्यानिवापक्ष्यन् दुर्बलान्बलवत्तराः ॥ शां० १५।३०॥**

